**అగమయత్** – అగమయతామ్ – అగమయన్.

**2. విప్రకుర్యుః** – వి,ప్ర – ఉపసర్గలు, 'డుకృఞ్ – కరణే' విధిలిఙ్ ప్రథమపురుష బహువచనాంతః।

విప్రకుర్యాత్ –విప్రకుర్యాతామ్ – **విప్రకుర్యుః**

**3. స్పృశన్తి** – 'స్పృశ – సంస్పర్శనే' తుదాదయః, పరస్మైపదీ, సకర్మకమ్, అనిట్, లట్ – ప్రథమపురుషబహువచనాంతః।

స్పృశతి – స్పృశతః – **స్పృశన్తి.**

ఇతి రామోరావిరచితయా మృణాళినీసమాఖ్యయా వ్యాఖ్యయా సమేతః శ్రీకాలిదాసవిరచితే కుమారసమ్భవే మహాకావ్యే **ఉమాప్రదానో**నామ షష్ఠః సర్గః సమాప్తః।

–6వ సర్గకు మృణాళినీ వ్యాఖ్యానము–

ది – 28-05-2011 సాయం సమయం గం. 6.47ని.లకు ప్రారంభింపబడి,
ది – 12-07-2011 ఉదయం గం. 7.07ని.లకు పూర్తికావింపబడినది.

– రామోరా

శ్రీః





అనుబంధము – 1

**శ్లోకానుక్రమణికా – కుమారసమ్భవమహాకావ్యమ్ – షష్ఠః సర్గః**

అనుబంధము - 2

పదవివరణసూచీ







అనుబంధము - 3

**కుమారసమ్భవమహాకావ్యమ్ - షష్ఠఃసర్గః - శివమహాపురాణమ్**

| | |
|---|---|
| **अथ विश्वात्मने गौरी** | तत्क्षमस्वापराधं मे लोकलीलानुसारिण:। |
| **संदिदेश मिथ: सखीम्।** | न त्वादृशीम्प्रणयिनीं पश्यामि च त्रिलोकके। |
| **दाता मे भूभृतां नाथ:** | सर्वथाहं तवीधीन: स्वकाम: पूर्यता: शिवे!। |
| **प्रमाणीक्रियतामिति।।** | एहि प्रिये! मत्सकाशं पत्नी त्वं मे वरस्तव। |
| | इत्युक्ते देवदेवेन पार्वती मुदमाप सा। |
| | तपोजातं तु यत्कषृं तज्जहौ च पुरातनम्। |
| | सर्व: श्रमो विनष्टोऽ भूत्सत्यस्तु मुनिसत्तम!। |
| | फले जाते श्रम: पूर्वो जन्तोर्नाशमवप्नुयात्। |
| | पितुर्गेहे मया सम्यग्गम्यते त्वदनुज्ञया। |
| **स तथेति प्रतिज्ञाय** | |
| **विसृज्य कथमप्युमाम्।** | |
| **ऋषी ज्योतिर्मयान्सप्त** | |
| **सस्मार स्मरशासन:।** | |
| **तद्दर्शनादभूच्छंभो-** | प्रसिध्दं क्रियता तद्वै विशुध्दं परमं यश: । |
| **भूयान्दारार्थमादर:।** | गन्तव्यं भवता नाथ। हिमवत्पार्श्वत: प्रभो। |
| **क्रियाणां रवलु घर्म्याणां** | याचस्व मां ततो भिक्षुभूत्वा लीलाविशारद:। |
| **सपन्त्यो मूलकारणम्।।** | एतस्मिन्नंतरे तात। शम्भुना सत्प एव ते। |
| **सोऽहं तृष्णातुरैर्वृष्टिं** | संस्मृता ऋषय: सद्यो विरहव्याकुलात्मना। |
| **विद्युत्वनिव चातकै:।** | ऋषयश्चैव ते सर्वे शम्भुना संस्मृता यदा। |
| **आरिविप्रकृतैर्देवै:** | तदाजग्मु: स्वयं सद्य: कल्पवृक्षा इवापरे। |
| **प्रसूतिं प्रति याचित:।।** | अरूंधती तथायाता साक्षात्सिद्धिरिवापरा। |
| **तामस्मदर्थे युष्माभि-** | साधनीया विशेषेण लोकानां सिद्धिहेतवे। |
| **र्याचितव्यो हिमालय:।** | देवानां दु:खमद्धत्पन्नं तारकात्सुदुरात्मन:। |
| **विक्रियायै न कल्पन्ते** | ब्रहाणा च वरो दत्त: किंकरोमि दुरासद:। |

**संबन्धाः सदनुष्ठिताः।।**
**ततः परममित्युक्त्वा**
**प्रतस्थे मुनिमण्डलम्।**
**भगवनपि संप्राप्तः**
**प्रथमोद्दिष्टमास्पदम्।**
**अलकामतिवाह्यैव**
**वसतिं वसुसंपदाम्।**
**स्वर्गाभिष्यन्दवमनं**
**कृत्वेवोपनिवेशितम्।।**
**कर्तव्यं वो न पश्यामि**
**स्याच्चेत्किं नोपपद्यते।**
**मन्यते मत्पावनायैव**
**प्रस्थानं भवतामिह।।**

मूर्तयोष्टौ च याः प्रोक्ता मदीयाः परमर्षयः।
ताः सर्वा उपकाराय न तुं स्वार्थाय तत्रुफुटम्।
तथा च कर्तुकामाहं विवाहं शिवया सह।
तया वै सुतपस्तप्तं दुष्करं परमर्षिभिः।
पार्वतीवचनाद्भिक्षुरुपो यातो गिरेर्गृहम्।
अहं पावितवान्काले यतो लीलाविशारदः।
मां ज्ञात्वा तौ परं ब्रह्म दम्पती परभक्तितः।
दातुकामावभूतां च स्वसुतां वेदरीतितः।
देवप्रेरणयाहं वै कृतवानस्मि निन्दनम्।
स्वकन्यां नेच्छतो दातुं मह्यं हि मुनयोधुना।
तस्माद्भवन्तो गच्छंतु हिमाचलगृहं ध्रुवम्।
तत्र गत्वा गिरिवरं तत्पत्नीं च प्रबोधय।
कथनीयं प्रयत्नेन वचनं वेदसम्मितम्।
इत्येवं वचनं श्रुत्वा मुनयस्ते - मलाशयाः।
आनन्दं लेभिरे सर्वे प्रभुणानुग्रहीकृताः।
गता आकाशमार्गेण यत्रास्ति हिमवत्पुरम्।
दृष्ट्वा तां च पुरं दिव्यमृषयस्ते - तिविस्मिताः।
वर्णयन्तश्च स्वं पुण्यमब्रुवन्वै परस्परम्।

**ऋषय ऊचुः-**

पुण्यवन्तो वयं धन्या दष्ट्वेतद्धिमवत्पुरम्।
यस्मादेवंविधे कार्ये शिवेनैव नियोजिताः।
अलकायांच स्वर्गाच्च भोगवत्यास्तथा पुनः।
विशेषेणामरावत्या दृश्यते पुरमुत्तमम्
उद्यनानि विचित्राणि प्रसन्नैः पूजितान्यथा।
नराश्र्च देवताः सर्वे स्त्रियश्चाप्सरसं तथा।
कर्मभूमो याज्ञिकाश्च पौराणाः स्वर्गकाम्यया।
कुर्वति ते वृथा सर्वे सवें विहाय हिमवत्पुरम्।



**तथापि तावस्कस्मिंश्चि**
**दाज्ञां मे दातुमर्हथ।**
**विनियोगप्रसादा हि**
**किंकराः प्रभविष्णुषु।।**
**अस्तोतुः स्तूयमानस्य**
**वन्द्यस्थानन्यवन्दिनः।**
**सुतासंबन्धविधिना**
**भव विश्वगुरोर्गुरुः।**
**स ते दुहितरं साक्षा ।**
**त्साक्षी विश्वस्य कर्मणाम्**
**वृणुते वरदः शंभु**
**रस्मत्संक्रामितैः पदैः।।**

यावन्न दृष्टमेतच्च तावत्सर्गपरा नराः।
हदृष्टमेतद्यदा विप्राः किं स्वर्गेण प्रयेजनम्।

**ब्रह्मोवाच-**

इत्येवमृषिवर्यास्ते वर्णयन्तः पुरं च तत्।
गता हैमालयं सर्वे गृहं सर्वसमृध्दिमत्।
तान्हष्ट्वा सूर्यसक्काशान् हिमवान्विस्मितो - ब्रवीत्
दूरादाकाशमार्गस्थान्मुनीन्सप्त सुतेजसः।
सप्तैते सूर्यसङ्काशाः समायांति मदन्तिके।
पूजा कार्या प्रयत्नेन मुनीनां च मयाधुना।
वयं धन्या गृहस्थाश्च सर्वेषां सुखदायिनः।
येषां गृहे समायान्ति महात्मानो यदीदृशाः।
यस्माद्भवन्तो मद्गेहमागता विष्णुरुपिणः।
पूर्णानां भवतां कार्यं कृपणानां गृहेषु किम्।
तथापि किंचित्कार्यं च सदृशं सेवकस्य मे।
कथनीयं सुदयया सफलं स्याज्जनुर्मम।

**ऋषय ऊचुः-**

शैलेन्द्र! श्रूयतां वाक्यमस्माकं शुभकारणम्।
शिवाय पार्वतीं देहि संहर्तुः श्र्वशुरो भव।
अयाचितारं सर्वेशं प्रार्थयामास यत्नतः।
तारकस्य विनाशाय ब्रह्माा सम्बन्धकर्मणि।
नोत्सुको दारसंयोगे शङ्करो योगिनां वरः।
विधेः प्रार्थनया देवस्तव कन्यां ग्रहीष्यति।
दुहितुस्ते तपस्तप्तं प्रतिज्ञानं चकार सः।
हेतुद्वयेन योगींद्रो विवाहं च करिष्यति।
एतच्छ्रुत्वा वचस्तेषां मेर्वादीनां हिमाचलः।
सुप्रसन्नतरो - भूद्वै जहास गिरिजा हृदि ।

अरुंधती च तां मेनां बोधयामास कारणात्।
नानावाक्यसमूहेनेतिहासैर्विविधैरपि।
सप्तर्षयो महाभागा वचः शृणुत मामकम्।
मदीयं च शरीरं वै पत्नी मेना सुतास्सुता।
ऋद्धिसिद्धश्च चान्यदवै शिवस्यैव न चान्यथा।
अथ शैलेश्वरः प्रीतो हिमवान्मुनिसत्तम।
स्वपुरं रचयामास विचित्रं परमोत्सवम्।
तथैव सर्वं परया मुदान्वित
श्चक्रे गिरीन्द्रः स्वसुतार्थमेव।
गर्गं पुरस्कृत्य महाप्रभावं
प्रस्तावयोग्यं च सुमंगलं हि।
अथ शम्भुः समाहूय नन्द्यादीन् सकलान्गणान्।
आज्ञापयामास मुदा गन्तुं स्वेन च तत्र वै।

**ते हिमालयमामन्त्र्य**
**पुनः प्राप्य च शूलिनम्।**
**सिंध्दं चास्मै निवेद्यार्थं**
**तव्दिसृष्टाः खमुद्ययुः**

---



అనుబంధము - 4

## కుమారసంభవములోని లోకోక్తులు

| వ.నెం. | లోకోక్తి | శ్లోకము |
|---|---|---|
| 1) | స్త్రీ పుమానిత్యనాస్థైషా వృత్తం హి మహితం సతామ్ | 12 |
| 2) | క్రియాణాం ఖలు ధర్మ్యాణాం సత్పత్న్యో మూలకారణమ్ | 13 |
| 3) | ప్రాయఃప్రత్యయ మాధత్తే స్వగుణేషూత్తమాదరః | 20 |
| 4) | విక్రియాయై న కల్పన్తే సంబన్ధాః సదనుష్ఠితాః | 29 |
| 5) | ప్రాయేణైవం విధే కార్యే పురంధ్రీణాం ప్రగల్భతా | 32 |
| 6) | య దధ్యాసిత మర్హద్భి స్తద్ధి తీర్థం ప్రచక్షతే | 56 |
| 7) | వినియోగ ప్రసాదా హి కింకరాఃప్రభువిష్ణుషు | 62 |
| 8) | అశోచ్యా హి పితుః కన్యా సద్భర్తృప్రతిపాదితా | 79 |
| 9) | ప్రాయేణ గృహిణీనేత్రాః కన్యార్థేషు కుటుంబినః | 85 |
| 10) | భవ న్త్యవ్యభిచారిణ్యో భర్తురిష్టే పతివ్రతాః | 86 |

## అనుబంధము-5

श्रीः

# कुमारसम्भवमहाकाव्यम्

## (आनन्ददेवायनिवल्लभदेवविरचितायां कुमारसंभवपञ्जिकायां)

## षष्ठः सर्गः

१. अथ विश्वेत्यादि ॥ अथ अनन्तरं हरावष्टम्भनादनन्तरं (गौरी) पार्वती विश्वात्मने शर्वाय मिथः गुप्तं सखीं संदिदेश अचीकथत् । किमिति । हे सखि इति कथय (मे) मम भूभृतां नाथः पिता दाता वर्तते । युष्माभिः स प्रमाणीक्रियताम् इति । यतः कन्या हि जनकाधीना ॥ १ ॥

२. तया व्याहृतेत्यादि ॥ तया सख्या प्रियस्याभ्यासे समीपस्थेऽपि भर्तरि (व्याहृतसन्देशा) कथितसन्देशा । अत एव हि निभृता सलज्जत्ववशात् विनीतैव (सा) देवी बभौ रेजे स्वयमभाषमाणेन निभृतत्वे सति शोभालङ्कारः। शालीनत्वं हि कन्यानामलङ्कारः। केव सा बभौ मधौ वसन्ते अभ्यासे निकटस्थे परभृतोन्मुखी कोकिलायुक्ता (चूतयष्टिः इव) चूततरुलता यथा स्यात् । यत्संदेशस्य कोकिलाया मुखत्वम् । औपचारिकश्च संदेशव्यवहारः। हरस्य मधुरुपमानं गौर्याश्चूतलता सख्याः परभृता । परभृतादीनां कोकिलार्थत्वेऽपि क्रिया प्रवृत्तिनिमित्तं, न तु जातिरिति जातेरस्त्रीविषयत्वादिति ङीष् न भवति ॥ २ ॥

३. स तथेतीत्यादि ॥ स (स्मरशासनः) स्मररिपुः तथा इति एवं करोमीति प्रतिज्ञाय एवं याचेऽहं नगेशमित्यङ्गीकृत्य (उमां) गौरीं च (कथम् अपि) कृच्छ्राद्





(विसृज्य) विमुच्य ऋषी (सस्मार) अस्मार्षीत् । कान्मुनीन् । ज्योतिगृहान् ज्योतींषि तारा गृहं धिंण्यं स्थानं येषां तान् । सप्तर्षीनित्यर्थः । 'शसुतींहिंसायां' (धा.पा. ७२७) स्मरं शासितवानिति स्मरशासनः । शासोर्वा रूपम् ॥ ३ ॥

४. ते प्रभेत्यादि ॥ ततः ते (तपोधनाः) मनुयः (सारून्धतीकाः) अरुन्धतीसहिताः सपदि स्मरणानन्तरमेव (प्रभोः) देवस्य (पुरः) अग्रतः प्रादुरासन् आविर्भूताः । (प्रभामण्डलैः) निजतेजोमण्डलैः (व्योम) आकाशं (द्योतयन्तः) भासयन्तः ॥ ४ ॥

५. आप्लुता इत्यादि ॥ कीदृशास्ते महर्षयः। आकाशगङ्गास्त्रोतस्सु सुरसरित्प्रवाहेषु आप्लुताः स्नाताः । कीदृशेषु (तीरमन्दारकुसुमोत्तरवीचिषु) तटपर्यन्तमन्दारसुमनोधिकतरङ्गेषु तीरे पर्यन्ते मन्दारकुसुमैरुत्तरास्तदधिका उत्तराः प्रधाना वा वीचयो येषु । उत्किर इति पाठे कुसुमान्युत्किरन्ति क्षिपन्ति येते वीचयो येषाम् । अथ च कुसुमानामुत्कराणि राशयो वीचयो येषाम् । तथा जलक्रीडागतानां (दिङ्नागमदगन्धिषु) दिग्गजानां मदगन्धः सुगन्धो विद्यते येषु ॥ ५ ॥

६. मुक्तायज्ञेत्यादि ॥ (मुक्तायज्ञोपवीतानि) मुक्तामयानि यज्ञोपवीतानि (बिभ्रतः) दधतः। (हेमवल्कलाः) हेम्नः सुवर्णस्य वल्कलानि चीवराणि येषां ते। (रत्नाक्षसूत्राः) रत्नमयानि चाक्षसूत्राणि येषां ते, रत्नमयजपावलयाः। अतश्चोत्प्रेक्षते। कल्पवृक्षाः इव प्रव्रज्याम् आश्रिताः प्रव्रजनं स्थिताः। तेषां हि रत्नसुलभत्वम् । प्रव्रजनं प्रव्रज्या, 'व्रजयजोर्भावे क्यप्।' (पा.सू. ३-३-६८)॥६॥

७. अधः प्रस्थापितेत्यादि ॥ (सहस्त्ररश्मिना) रविणा (शश्वत्) नित्यं (सप्रणामं) प्रणतिपूर्वम् (उदीक्षिताः) उद्वीक्षिताः ऊर्ध्वं दृष्टाः। ऊर्ध्वं कुत इत्याह। यतस्तेषां ध्रुवनिकटे स्थानम् । अत एव (अधःप्रस्थापिताश्वेन) अधः प्रस्थापिता अश्वा येन । (समावर्जितकेतुना) समावर्जितो नामितः केतुर्ध्वजो येन । अनेनौद्धत्यं परिहृतम् ॥ ७ ॥

८. आसक्तेत्यादि ॥ तथा प्रलयापदि कल्पान्तविपत्तौ (महावराहदंष्ट्रायाम्) आदिवराहदंष्ट्रायां विश्रान्ताः स्थिता इत्यविनश्वरोक्तिः। किमेकाकिनस्तत्र विश्रान्ता इत्याह । उद्धृतया (सार्धं) सह भुवा । सा हि भगवता वराहेण तोयादुद्धृत्य दंष्ट्रायामूढा । (आसक्तबाहुलतया) आसक्ता आतुरत्वात्पातभयाल्लगिता बाहुलता यया ॥ ८ ॥

९. सर्गशेषेत्यादि ॥ पुराविद्भिः चिरन्तनैर्मार्कण्डेयादिभिः पुरातनाः आद्याः धातारः वेधसः इति (कीर्तिताः) शब्दिताः। कुतः। विश्वयोनेः ब्रह्मणः सर्गशेषप्रणयनात् अवशिष्ट सृष्टि निर्माणात् । ब्रह्मणा हि किञ्चिन्निर्माय ततस्ते सृष्टौ नियुक्ताा इत्यागमः।९॥

१०. प्राक्तनानामित्यादि ॥ तथा तपस्विनः अपि प्राक्तनानां पूर्वाचीर्णानां विशुद्धानां निर्मलानां (परिपाकम् उपेयुषां) पक्वानां च तपसां (फलानि) फलम् (उपभुञ्जानाः) अश्नन्तः। अन्यस्य हि जन्मान्तरे तपः फलदायि। तेषां तु चिर जीवितत्वात्तदैव। अपि विस्मये। चित्रं सम्प्रति तपस्यन्तस्तपः फलोपभोगिनः॥१०॥

११. तेषां मध्येत्यादि ॥ बहु नितरां बभासे रेजे । कीदृशी । पत्युः वशिष्ठस्य (पादार्पितेक्षणा) अङ्घ्रिनिहितनेत्रा । यतः साध्वी पतिदेवता । अन्यत्र हि दृष्टिरस्तस्या न याति । अतश्चोत्प्रेक्षते । साक्षात् मूर्तिमती तपःसिद्धिः इव । मुनीनां हि सिद्ध्या भाव्यम् ॥ ११ ॥

१२. तामगौरवेत्यादि ॥ ताम् अरुन्धतीं (मुनीन्) ऋषीन् च अगौरवभेदेन समपतिपत्त्या अपश्यत्, ईश्वरः आवर्जयत् । यस्मादियं स्त्री अयं च पुमान् इति एषा अनास्था अध्यवस्था अप्रधानम् । गौरवकरणे एतन्नोपयुज्यते । अपि तु सतां वृत्तं शीलं महितम् । साधवो वृत्तं पूजयन्तीत्यर्थः। अरुन्धत्याश्चान्यः कश्चरित्रेणाधिकः॥ १२ ॥



१३. तद्दर्शनादित्यादि ॥ तद्दर्शनात् तस्याः साध्व्या अरुन्धत्या आलोकनात् शंभोः शिवस्य (भूयान्) नितरां (दारार्थं) भार्यामानेतम् (आदरः) प्रयत्नो बभूव। यस्मादिज्यादीनां धर्म्याणां क्रियाणां सत्पत्न्यः साध्व्यः पत्न्यः एव मूलसाधनं कारणम् ॥ १३ ॥

१४. धर्मेणापीत्यादि ॥ कामस्य मनः उच्छ्वसितं । विकसितमङ्कुरितम् । कीदृशस्य कामस्य । (पूर्वापराधभीतस्य) पूर्वस्मादपराधादीश्वरचेतश्चालनलक्षणाद् भीतस्य स्वस्वरूपेण त्रस्तस्य शक्तिरूपेण (उच्छ्वसितं मनः) मनोभूरुल्लसित इत्यर्थः। कदा । शर्वे (पार्वतीं प्रति) पार्वत्यां धर्मेण अपि पदम् अवस्थाबन्धमुद्यमं कारिते सति । यदा हरो गौरीमुद्वोढुमैच्छदित्यर्थः। एवं ह्युक्तम् – 'परिणेष्यति पार्वतीं यदा' (कुमार.४-४९) इत्यादि । अपि विस्मये । चित्रमिदं यदुमायां पदं हरो धर्मेण कारितो न तु रागेण, तथापि स्मरः पूर्वापराधभीत इति । भयं तु चण्डकोपत्वादीशस्य पुनर्बाधाशङ्कया ॥ १४ ॥

१५. अथ त इत्यादि ॥ (अथ) ततः ते (मुनयः) सप्तर्षयः (जगद्गुरुं) भगवन्तं (पूजयित्वा) प्रणामाञ्जलिनार्चयित्वा इदं वक्ष्यमाणम् ऊचुः अब्रुवन् । कीदृशाः। अनूचानाः प्रह्वाः आज्ञाविधेयाः साङ्गवेदाध्यायिनो वा । तथा (प्रीतिकण्टकितत्वचः) प्रीत्या भक्त्या कण्टकितत्वचो रोमाञ्चिताङ्गाः ॥ १५ ॥

१६,१७. यद् ब्रह्मेत्यादि ॥ यदध्यक्षेणेत्यादि ॥ यत् अस्माभिः (सम्यक्) विधिवत् ब्रह्म वेदज्ञानं च आम्नातम् अभ्यस्तं परमात्मज्ञानं वा । यत् च अग्नौ विधिवत् (हुतम्) इष्टं यत् च सम्यक् तपः (तप्तं) चीर्णं तस्य सर्वस्य फलम् (अद्य) अधुना पक्कम् । यद् वयं (जगताम् अध्यक्षेण) भुवनगुरुणा (त्वया) भवता अद्य (मनोविषयं) चित्तगोचरम् आरोपिताः यत्त्वया स्मृता इत्यर्थः। (मनोरथस्य अपि अपथं) मनोरथानामप्यप्रथमविषयम् । न हि मनोरथा अपि कस्यचिदेतावन्तः प्रसृता यद् भगवान् मे स्मरिष्यति ॥१६॥१७॥ युग्मम् ।

१८. यस्य चेतसीत्यादि ॥ हे भगवन्! तावत् त्वं यस्य (चेतसि) मनसि वर्तेथाः तिष्ठेः स कृतिनां कृतार्थानां (वरः) श्रेष्ठः पुण्यवतां पूज्यः । उपचितसुकृत सम्भाराणां शिरोमणिमुकुट इत्यर्थः । पुण्यभारसंपूर्णा हि भगवन्तं स्मरन्ति। यदुक्तम् —

**किं तेन न कृतं लोके किं न दत्तं महात्मना ।**
**शिवः प्रसन्नचित्तेन सन्ततं येन पूजितः ॥**

किं पुनः तव चेतसि वर्तते, त्वं यस्य स्मरसि स कृतिनां वरो भवेत् । (ब्रह्मयोनेः) ब्रह्मणः विरञ्चस्य परस्य वा ज्ञानस्य योनेः प्रभवस्य तव ॥ १८ ॥

१९. सत्यमर्कादि ॥ ध्रुवनिकटवासात् (सत्यं) कामम् (अर्कात् च सोमात् च) सोमसूर्याभ्यां परम् उच्चं (पदं) स्थानं वयम् (अध्यस्महे) अधितिष्ठामः । अद्य पुनः तत् (तव) भवतः (स्मरणानुग्रहात्) स्मरणप्रसादलाभात् (उच्चैस्तरम्) उन्नततरम् । त्वदनुध्यानाद्धि वयमत्युन्नताः संवृत्ताः ॥ १९ ॥

२०. त्वत्सम्भावितेत्यादि ॥ आत्मानं (त्वत्संभावितं) त्वया आदृतं योग्यत्वेन ज्ञातं सन्तं बहु मन्यामहे उत्कृष्टं जानीमः। यस्मात् उत्तमादरः (प्रायः) प्रायेण स्वगुणेषु प्रत्ययम् अवबोधं विश्वासम् आधत्ते करोति । महाजनगौरवाद् विज्ञायते नूनं गुणान्विता वयमिति । बह्विति क्रियाविशेषणत्वेऽप्यात्मन एवोत्कर्षः प्रतीयते ॥ २० ॥

२१. या नः प्रीतिरित्यादि ॥ हे (विरूपाक्ष) पिङ्गलनेत्र (त्वदनुध्यानसम्भवा) भवत्स्मरणेनोत्पन्ना या असौ (प्रीतिः) तुष्टिः (नः) अस्माकं सा हि किम् इति (तुभ्यं) तव आवेध्यते । यस्मात् सर्वेषां (देहिनां) प्राणिनां त्वम् (आत्मा असि) अन्तस्तिष्ठसि । अतस्त्वं स्वयमेव सर्वमवैषि ॥२१॥

२२. साक्षात् दृष्टोऽसीत्यादि ॥ चित्रमिदं (यत्र) साक्षात् (दृष्टः) आलोकितः अञ्जसा सामस्त्यभावेन कात्स्न्र्येन तत्त्वेन वा । त्वां वयं न (विद्मः) जानीमः।





अतश्च (प्रसीद) प्रसादं कुरु कथय (आत्मानम्) आत्मस्वरूपं किंरूपोऽसीति । स्वयमेव कथं न विचारयथेत्याह-न धियां पथि वर्तसे । यश्च बुद्धेरप्यविषयः स कथं स्वयमेव गम्यते ॥२२॥

२३. सामान्येनोक्तं विशेषेणाह —

किं येनेत्यादि ॥ (एष) अयं (ते) तव प्रत्यक्षदृश्यः भागः कतमः। किं येन ब्रह्माण्डभागं व्यक्तं सृजसि स ब्रह्मा उत येन तद् बिभर्षि पालयसि स विष्णुः । अथो यः तस्य विश्वस्य संहर्ता ग्रसिता स रुद्रः इति कतमः एष ते । रुद्रत्वेऽवगते संशयस्यावसर इति चेत्, सत्यं तथापि चिन्त्यमेतत् ॥ २३ ॥

२४. अथ वा सुमहतीत्यादि ॥ अथ वा एषा प्रार्थना (सुमहती) गुह्यार्थावबोधाद-तिमहती दुर्लभा (देव) भगवन् (तिष्ठतु) आस्ताम् । (चिन्तितोपस्थितान्) आध्यातान् सन्तः प्राप्तान् नः अस्मान् (शाधि) आज्ञापय किं करवाम । साधयाम इति प्रार्थने लोट् ॥ २४ ॥

२५. अथ मौलीत्यादि ॥ (अथ) ततः (परमेश्वरः) देवः प्रत्याह प्रतीपमालपत्। किं कुर्वन् । (मौलिगतस्य) शिरःस्थस्य (इन्दोः) शशिनः (तन्वीम्) अल्पीयसीं (प्रभां) ज्योत्स्नां (विशदैः) निर्मलैः (दशनांशुभिः) दन्तमयूखैः (उपचिन्वन्) वर्धयन् ॥ **आहेति भूते प्रयोगः प्रमादजः** ॥ २५ ॥

२६. विदितमित्यादि ॥ (वः) भवतां (विदितम्) अवगतमेव तत् यथा (मे) मम याः (काचित्) काश्चन प्रवृत्तयः सर्वे व्यापारास्ते न स्वार्थाः अपि तु परार्था एव। यतः क्षितिसलिलाग्निपवनयजमानाकाशसोमसूर्याख्याभिः (अष्टाभिः मूर्तिभिः) तनुभिः (इत्थंभूतः) एवंविधः परार्थोन्मुखः (सूचितः) कथित एवाऽहम् ॥२६॥

२७. सोऽहं तृष्णेत्यादि॥ स परार्थप्रवृत्तः अहम् (अरिविप्रकृतैः) सपत्नपरिभूतैः (देवैः) गीर्वाणैः प्रसूतिं प्रति पुत्रं प्रति (याचितः) प्रार्थितः। 'भगवन्! अपत्यरूपमयां

स्वमूर्तिमुत्पादय । योऽस्माकं जयाय सेनानीर्भविष्यति' इति । यथा (तृष्णातुरैः) पिपासुभिः चातकैः मयूरविशेषैः विद्युत्वान् मेघःवृष्टिं याच्यते । याच्यत इत्यप्रधान-कर्मणोर्निष्ठयोक्तत्वात् प्रसूतिवृष्ट्योर्द्वितीया भवत्येव । विद्युद् विद्यते यस्याऽसौ विद्युत्वान् ॥ २७ ॥

२८. अत आहर्तुमित्यादि ॥ यदाऽहं पुत्रं याचितः अतः कारणात् आत्म-जन्मने पुत्रोत्पत्तये (पार्वतीं) गौरीं (आहर्तुम्) आनेतुम् इच्छामि । यथा (हविर्भोक्तुः) अग्नेः (उत्पत्तये) आविर्भावाय (यजमानः) दीक्षितः अरणिं दारवीमा जिहीर्षति ॥२८॥

२९. तामस्मदित्यादि ॥ अतः तां पार्वतीम् (अस्मदर्थे) मदर्थं (युष्माभिः) भवद्भिः (हिमालयः) नगेशः (याचितव्यः) अर्थयितव्यः। यस्य यत्र व्यापारस्तन्मुखेन कस्मान्न मृग्यत इत्याह - सदनुष्ठिताः साधुभिर्निश्चिताः सम्बन्धाः (विक्रियायै न कल्पन्ते) विकृतिं न यान्ति, स्थिरा भवन्तीति ॥२९॥

३०. उन्नतेनेत्यादि ॥ तेन अद्रिनाथेन (योजितसम्बन्धं) कृतसम्बन्धं माम् अपि अवञ्चितं कृतार्थं वित्त जानीत । यथा मया जामात्रा स श्लाघ्यते तथाहमपि तेन श्वसुरेणेत्यपिशब्दार्थः। तथा रूपद्वयेनाप्यसावुत्कृष्टः। तत्र स्थावरमपेक्ष्य तेन उन्नतेन व्योमस्पृशा स्थितिमता स्थिरेण भुवः धुरम् (उद्वहता) बिभ्रता महीधरत्वादद्रीणाम् । जङ्गमेत्युन्नतेन महाप्रभावेण स्थितिमता समर्यादेन भूमेर्धुरं योगक्षेममुद्वहता पर्वतराजत्वात् वित्तेति विदेर्लोट् ॥३०॥

३१. एवं वाच्य इत्यादि ॥ वरगुणानुद्दिश्य कन्यार्थम् (एवम्) इत्थं तत्पितुः (वाच्यः) वक्तव्यम् इति (वः) भवतां न (उपदिश्यते) उच्यते । यस्मात् (साधवः) बिपश्चितः (भवत्प्रणीतं) युष्मन्निर्मितम् आचारं व्यवहारम् (आमनन्ति) आहुः। स्मृतिकर्तारो हि यूयम् ॥ ३१ ॥





३२. आर्याऽपीत्यादि ॥ तत्र हिमवद्गृहे (आर्या) भगवती अरुन्धती अपि व्यापारं साहाय्यकं (कर्तुं) विधातुमर्हति । यस्मात् एवंविधे कार्ये वधूमार्गणकृत्ये (पुरन्ध्रीणां) स्त्रीणां (प्रगल्भता) चातुर्यम् । ता ह्यनिच्छन्तमपि कन्यापितरं प्रेरयितुं जानन्ति ॥३२॥

३३. तत्प्रयातेत्यादि ॥ तत् तस्मात् (सिद्धये) कार्यसाधनाय ओषधिप्रस्थम् ओषधिप्रस्थाख्यं हिमवत्पुरं (प्रयात) व्रजत । पुनः च (नः) अस्माकं कार्यसिद्धिनिवेदनाय अस्मिन् (महाकोशीप्रपाते) महाकोशाख्ये प्रपाते भृगौ समागमः। अत्राहं भवतां प्रतिपालयामीत्यर्थः॥३३॥

३४. तस्मिन्संयमिनामित्यादि ॥ ततः तस्मिन् भगवति संयमिनाम् आद्ये अपि (परिणयोन्मुखे) विवाहाभिमुखे (जाते) सम्पन्ने सति (प्राजापत्याः) ब्रह्मतनयाः । (परिग्रहव्रीडां) विवाहलज्जां (जहुः) अत्यजन् । ते हि नित्यं ब्रह्मचारिणः शम्भोरग्रे सदैव लज्जिता आसन् 'अनुभूतस्त्रीसंगमानामस्माकं कीदृशी तपस्विता' इति । तदा तु तपस्विनायके रागिणि जाते सर्वेषां सामान्यात्त्रपात्यागः॥ ३४ ॥

३५. ततः परमित्यादि ॥ (ततः) तदनन्तरं परमेवमस्तु इति (उक्त्वा) अभिधाय (मुनिमण्डलं) सप्तर्षिवलयं (प्रतस्थे) जगाम । (भगवान्) देवः अपि (प्रथमोद्दिष्टम् आस्पदं) महाकोशीप्रपातं संप्राप्तः सञ्चचार । परममित्युच्यमाने पुण्याहवच-सीत्यन्ये ॥ ३५ ॥

३६. तेऽप्याकाशमित्यादि ॥ मनसा निर्मिताः मानसाः ते सप्तर्षयः (असिश्यामं) खड्गनीलम् (आकाशं) खम् (उत्पत्य) उत्प्लुत्य ओषधिप्रस्थं पुरम् (आसेदुः) प्रापुः । मनसा सह मन इवेति चातुर्योक्तिः। यदैव गमनाय मनः कृतं तदैव पुरं प्रापुरित्यर्थः॥ ३६ ॥

३७. अलकामतिवाह्येत्यादि ॥ कीदृशं पुरम् । वसुसंपदां रत्नवृद्धीनां वसतिम् आश्रयभूताम् अलकां वैश्रवणपुरीम् अतिवाह्य निष्पीडय इव लुण्टयित्वेव निर्मितं (स्वर्गाभिष्यन्दवमनं) स्वर्गसारनिश्च्योतनं (कृत्वा) विधाय इव (विनिवेशितम्)

रचितम् । सर्वोत्कृष्टयोरलकामरावत्योः सारमादायेव कृतमित्यर्थः। एवमप्युक्तम् – 'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन । स्वदेशाभिष्यन्दवमनेन च नगरं विनिवेशयेत् ॥ — (अर्थशास्त्रम् –२-१-१) ॥ ३७ ॥

३८. गङ्गास्रोत इत्यादि ॥ अन्यत्र कस्मात् तन्न रम्यम् यत् (गुप्तौ) गुप्तप्रदेशे अपि (मनोहरं) रम्यं सेव्यमेव लक्ष्यते । तथा हि – (गङ्गास्रोतः - परिक्षिप्तं) सरिद्वराप्रवाहवेष्टितम् (इति) जलगुप्तिः । (वप्रान्तज्वलितौषधि) वप्रान्ते ज्वलितौषधिरित्यग्निदुर्गत्वम् । (बृहन्मणिशिलासालं) बृहत्यो मणिशिला एव सालः प्राकारो यत्र तत् । अन्यच्च नगरं जलाग्निप्राकारभीषणमसेव्यं भवति । एतच्चैवंविधमपि स्वभावभावाद् गुप्तावपि सेव्यं किमुच्यते । अत्र तु 'गुप्तावपि मनोहरं' पाठः ॥३८॥ त्रिभिः कुलकम् ।

३९. जितसिंहेत्यादि ॥ यत्र (जितसिंहभयाः नागाः) केसरिभ्यः करिणो न बिभ्यतीत्यर्थः। अश्वाः च (बिलयोनयः) वनविवरेभ्यो यत्रोत्तिष्ठन्तीति सैन्यसम्पत्ति कथनम् । मातरमनुहरन्तेऽश्वाः । अतो बिलशब्देनोच्चैःश्रवा उच्यते । 'बिलमुच्चैःश्रवो हये'। (द्र.मेदिनी १४८-४९) । यत्र (किंपुरुषाः) पुण्यजना किन्नरादय एव (पौराः) पुरवासिनः वनदेवताः एव च योषितः अङ्गनाः । दिव्या नारी वनदेवताः कथ्यते । अथ किमन्यजातीयाः पौरयोषितो न तत्र सन्ति । कियती चैषा प्रशंसा। एवं तर्हि यत्र यक्षाः किंपुरुषाश्च पौरतुल्याः पौरा वनदेवताश्च योषिन्निभाः। न तु तेषूपरि कस्यचिद् गौरवबुद्धिरिति पुरयोषित्स्तुतिः ॥ ३९ ॥

४०. शिखरासक्तेत्यादि ॥ यत्र वेश्मनां मुरजस्वनाः करणैः च चपटचाटपुट -उद्घट्टक-सन्निपातकप्रभृतिभिस्तालैः (व्यज्यन्ते) निश्चीयन्ते न तु स्वनतः। यतः शिखरासक्तमेघानाम् उच्चत्वात् प्रान्तावस्थितजलदानाम् । अत एव ते गम्भीराः अनुगर्जितसंदिग्धाः अनुगर्जितप्रतिश्रुताः संदिग्धाः पिहितरवाः। न हि जलदरवेषु तालसद्भावः॥ ४० ॥





४१. यत्र कल्पेत्यादि ॥ यत्र गृहयन्त्रपताकाश्रीः भवनशालभञ्जिका कृतक-वैजयन्तीशोभा (कल्पद्रुमैः) कल्पवृक्षैः एव यन्त्रपताकया या शोभा कार्या तां तत्र सुरतरव एव कुर्वन्तीत्यर्थः। यतः (विलोलविटपांशुकैः) विलोलानि चञ्चलानि विटपेषु प्रकाण्डेष्वंशुकानि वासांसि येषां तैः। पताकायां ह्यंशुकैर्भाव्यम् । अत एव सा (अपौरादरनिर्मिता) विनैव पौरादरेण पुरुषप्रयत्नेन निर्मिता कृता ॥४१॥

४२. यत्र स्फटिकेत्यादि ॥ यत्र पुरे (स्फटिकहर्म्येषु) स्फटिकसौधेषु या आपानभूमयः सरकोर्वीषु ज्योतिषां प्रतिबिम्बानि ताराप्रतिमाः एव उपहारतां पुष्पप्रकरत्वं प्राप्नुवन्ति यान्ति । सितत्वेन तत्सादृश्यत्वात् ॥ ४२ ॥

४३. यत्रौषधीत्यादि ॥ यत्र नक्तं रात्रौ दुर्दिने अपि आसारवर्षेऽपि अभिसारिकाः विलासिन्यः तमिस्त्राणां तमसाम् अनभिज्ञाः अननुभवित्र्यः। ध्वान्तततिभयं न जानन्तीत्यर्थः। यतः (ओषधिप्रकाशेन) ओषधिदीप्त्या (दर्शितसंचराः) दर्शितसंचरो मार्गो यासाम् ताः । संचरत्यस्मिन्निति संचरो मार्गः। तम एव तमिस्त्रम् । दुर्दिनं वर्षम् । (उक्तं च) –

**या दूतिका गमनकालमपारयन्ती**
**सोढुं स्मरज्वरभरातिपिपासितेव ।**
**निर्याति वल्लभजनाधरपानलोभा –**
**त्सा कथ्यते कविवरैरभिसारिकेति ॥ ४३ ॥**

४४. यौवनान्तमित्यादि ॥ अन्यत्र स्थविरान्तं वयस्तत्र तु यौवनान्तं वयः इति जराद्यभावकथनम् । यत्र च (कुसुमायुधात्) कन्दर्पाद्, (आतंकः) भयं, न त्वन्यकृतम् । तथा (रतिखेदसमुत्थाना) रतिखेदात्समुत्थानमुत्पत्तिर्यस्याः सा निद्रा एव संज्ञाविपर्ययः निश्चेतनत्वम्, न तु प्राणवियोग हत्यजरामरत्वोक्तः॥४४॥

४५. भ्रूभेदिभिरित्यादि ॥ यत्र (स्त्रीणां) मानिनीनां कोपैः क्रोधैः (प्रियाः) युवानः अप्रसादार्थिनः कृताः, प्रसादं तासां नार्थयन्ते कोपस्यैव रम्यतरत्वात् ।

यतः प्रणयकुपिता हि कामिन्यो रम्यतरा भवन्ति । तथा हि (भ्रूभेदिभिः) भ्रूभङ्गयुक्तैः (सकम्पोष्ठैः) स्फुरदधरैः (ललिताङ्गुलितर्जनैः) ललितानि रम्याणि अङ्गुलितर्जनानि येषु (तैः) ॥ ४५ ॥

४६. सन्तानकेत्यादि ॥ यस्य च बाह्यम् उपवनम् उद्यानं (गन्धमादनं) गन्धमादनमित्येतदाख्यो गिरिः । कीदृशम् । (संतानकतरुच्छायासुप्तविद्याधराध्वगम्) सन्तानकाख्यास्तरवः सुरवृक्षास्तेषां छायासु सुप्ता विद्याधरा एवाध्वगा यत्र । बाह्योद्यानं हि सर्वसेव्यम् । गन्धवत् सुरभि । **गन्धमादनशब्दो नपुंसकलिङ्गः**॥४६॥

४७. अथ न इत्यादि ॥ (अथ) ततः ते दिव्याः (मुनयः) सप्तर्षयः तादृशमोषधिप्रस्थं (प्रेक्ष्य) आलोक्य (स्वर्गाभिसन्धिसुकृतं) स्वर्गो मे भवत्विति (अभि) सन्धाय उद्दिश्य कृतं तपः (वञ्चनां) विडम्बनाम् इव (मेनिरे) बुबुधिरे । एतत्पुरमुद्दिश्य कस्मादस्माभिस्तपो न चीर्णम् । एतेन सुरपुरतोऽपि रम्यतरत्वमुक्तम् ॥ ४७ ॥

४८. ते सद्मनीत्यादि ॥ ततः ते मुनयः गिरेः हिमवतः (सद्मनि) गृहे वेगात् अवतेरुः अवातरन् । (उन्मुखद्वाःस्थवीक्षिताः) उन्मुखैर्द्वाःस्थैःप्रतीहारैर्वीक्षिताः। के एते स्युरिति । (लिखितानलनिश्चलैः) चित्रवह्निनिष्कम्पैः (जटाभारैः) जटाजूटैः उपलक्षिताः । द्वाः द्वारं तत्र तिष्ठतीति द्वाःस्थः॥ ४८ ॥

४९. गगनादित्यादि ॥ गगनात् आकाशभागात् अवतीर्णा अवरूढा सा (मुनिपरम्परा) सप्तर्षिमाला (रेजे) व्यद्युतत् । (तोयान्तः) जलमध्ये प्रतिबिम्बिता (भास्कराली) सूर्यपङ्क्तिः इव इति तेजस्विकथनम् । (यथावृद्धपुरःसरा) ये ये वृद्धा यथावृद्धं पुरःसरमग्रेगामि यस्याः सा यथावृद्धपुरःसराः । परम्परा पंक्तिः॥४९॥

५०. तानर्घ्यानित्यादि ॥ अर्घोऽर्चा तदर्थमुदकादिकं अर्घ्यं तत् (आदाय) गृहीत्वा (गिरिः) अद्रिराजः तान् मुनीन् (दूरात्) दूरं प्रत्युद्ययौ अभ्युज्जगाम।



यतः अर्घ्यान् अर्च्यान् । किं कुर्वन् । (सारगुरुभिः) सारेण बलेन गुरुभिर्दुर्वहैः पादन्यासैः (वसुन्धराम्) अवनिं (नमयन्) अधः प्रवेशयन् ॥ ५० ॥

५१. धातुताम्रेत्यादि ॥ कीदृशोऽसौ । प्रकृत्या एव हिमवान् इति सुव्यक्तः प्रकृत्या एव देहेनाऽपि सदृशः, सुखेन व्यज्यते ज्ञायते (इति सुव्यक्तः) रूपद्वयस्यापि सादृश्यात् । 'ईषद्दुःसुषु ....। (पा.सू.३-३-१२६) इति खल् । तथा हि स्थावरे तावत् (धातुताम्राधरः) धातवः एव ताम्रोऽधरो यस्य । प्रांशुः उच्चप्रमाणः (देवदारुबृहद्भुजः) देवदारुरेव बृहन्तो भुजा यस्य (शिलोरस्कः) शिला एव उरो वक्षो यस्य । जङ्गमे तु धातुताम्राधरः धातुरिव ताम्राधरः । प्रांशुः मानोन्नतः देवदारुवन्महाभुजः । शिलेव श्लक्ष्णं विशालमुरो यस्य । **अस्मिन्नवसरे न तथाऽयं सप्रयोजनश्लोकः** ॥ ५१ ॥

५२. विधिप्रयुक्तेत्यादि ॥ सा तान् मुनीन् शुद्धान्तम् अन्तःपुरम् आक्रमयामास निनाय । एतेन महागौरवकथनम् । अन्योऽपि यः किल शुद्धकर्मा सोऽन्तःपुरे नीयते । (विधिप्रयुक्तसत्कारैः) विधिना प्रयुक्तः कृतः सत्कारः पूजा येषां तैः । स तु स्वयं मार्गस्य देशकः, उपदेष्टा, अनेन पथा गच्छतेति । क्रमेर्गत्युपसर्जनप्राप्त्यर्थत्वादत्र न मुख्यं गत्यर्थत्वमिति तैरिति द्वितीयाभावः ॥ ५२ ॥

५३. तत्र वेत्रेत्यादि ॥ तत्र निशान्ते तान् ईश्वरान् वशिनः (भूधरेश्वरः) अद्रिनाथः (इति) इत्थं (वाचं) गिरः (उवाच) जगाद इति द्विकर्मको वचिः। वाचः ईश्वरान् वाचस्पतीन् तान् इति केचित् । ईश्वरो विजितेन्द्रियः। (वेत्रासनासीनान्) वेत्रं दारुविशेषस्तत्कृतेष्वासनेष्वासीनानुपविष्टान् । सोऽपि तदाज्ञया (कृतासनपरिग्रहः) गृहीतविष्टरः प्राञ्जलिः पेशलत्वात् कृताञ्जलिबन्धः॥५३॥

५४. अपमेघोदयमित्यादि॥ (अतर्कितोपपन्नम्) अतर्कितमशङ्कितम चिन्तितमुपपन्नं घटितम् । वः भवतां (दर्शनम्) अवलोकनम् (अपमेघोदयं वर्षम्) अनभ्रवृष्टि-

तुल्यम् । (अदृष्टकुसुमं फलम्) अदृष्टकुसुमफलनिभं च । ममेत्यसम्भवोपमानगर्भं रूपकमलङ्कारः। प्रतिभाति इति दृशिग्रहणं विकल्पार्थमिति द्वितीयाभावः॥५४॥

५५. मूढं बुद्धमित्यादि ॥ (भवदनुग्रहात्) भवदीयदर्शनानुग्रहादहम् आत्मानं (मन्ये) अवगच्छामि (मूढं) सन्तं बुद्धम् इव पण्डितमिव । (आयसम्) अयोमयं सन्तं (हैमीभूतं) सुवर्णीभूतम् इव । भूमेः भुवश्च (दिवम् आरूढम् इव) स्वर्गमुद्गतमिव। तत्तुल्यपरितोषात् ॥ ५५ ॥

५६. अद्य प्रभृतीत्यादि ॥ (अद्य प्रभृति) इत आरभ्य (भूतानां शुद्धये अधिगम्यः अस्मि) जनाः पापापनुत्तये मां द्रष्टुमायास्यन्ति । यस्मात् अर्हद्भिः (अध्यासितम्) आसेवितं तत् तीर्थं (प्रचक्षते) आहुः । भवदागमनाद्धि तीर्थीभूतोऽहम् ॥ ५६ ॥

५७. अवैमि पूतमित्यादि ॥ हे (द्विजोत्तमाः) मुनीशाः (द्वयेन) उभयेन एव अहम् आत्मानं (पूतं) पवित्रम् अवैमि जाने । केन द्वयेनेत्याह । (मूर्ध्नि) शिरसि (गङ्गाप्रपातेन) भागीरथीनिर्झरेण (वः) भवतां (धौतपादाम्भसा) क्षालितचरणोकदेन च । यादृशं गाङ्गमम्भः पवित्रं तादृशं भवत्पादोदकं च । पूज्यांघ्रियुगं प्रक्षाल्य तज्जलं शीर्षे वहेदित्याप्ताः ॥ ५७ ॥

५८. जङ्गमं प्रैष्येत्यादि ॥ (मे) मम (द्वैरूप्यं) रूपद्वयम् अपि भवद्भिः विभक्तानुग्रहं विभागीकृतप्रसादं कृतम् । तथा हि जङ्गमं यन्मे रूपं तद् वः युष्माकं (प्रैष्यभावे) दासकर्मणि । स्थावरमपि (चरणाङ्कितं) युष्मत् पादमुद्राचिह्नितम् । अत्यर्थं गच्छतीति जङ्गमम् । 'नुगतोऽनुनासिकान्तस्य' (पा.सू. ७-४-८५)। प्रेषणीयः प्रैष्यः। द्वे एव रूपे द्वैरुप्यम् ॥ ५८ ॥

५९. भवत्सम्भावनेत्यादि ॥ (भवत्सम्भावनोत्थाय) युष्मदादरोत्पन्नाय मूर्छते वर्धमानाय परितोषाय प्रहर्षाय (मे) अङ्गानि मम व्याप्तदिगन्तानि अपि न प्रभवन्ति न समर्थानि । तं वोढुं न शक्नुवन्तीत्यर्थः। इति परितोषस्य बाहुल्यकथनम् । परितोषाय न प्रभवन्तीत्यलमर्थत्वाच्चतुर्थी ॥५९॥



६०. न केवलमित्यादि ॥ (वः) भवतां (भास्वता) दीप्तिमता दर्शनेन न केवलं (दरीसंस्थं) गुहासंस्थं तमः नुन्नं यावद् (रजसः) रजोगुणात् अपि परं मोहाख्यम् (अन्तर्गतं) हृत्स्थम् अपि अपास्तम् । भवदालोकनेन ह्यहं निर्मोहः संवृत्तः॥६०॥

६१. कर्तव्यं वो नेत्यादि ॥ अस्मत्सकाशे तपस्वित्वाद् (वः) भवतां (कर्तव्यं) प्रयोजनं (न पश्यामि) नेक्षे । अथ चेत् सम्भवेत् तत् किं महाप्रभावत्वात्स्वत एव न (उपपद्यते) घटते । ये किल सस्पृहास्तेषामन्यायत्तं कार्यं न तु निःस्पृहाणाम्। ततश्च (मन्ये) जाने (मत्पावनाय) मत्पवित्रीकरणाय एव (भवतां) युष्माकम् इदं (प्रस्थानम्) आगमनम् ॥ ६१ ॥

६२. तथापि तावदित्यादि ॥ यद्यपि वः सर्वं स्वयमेव सम्पद्यते तथापि कुत्राऽपि कार्ये (मे) मम (आज्ञाम्) आदेशं (दातुम्) अर्हथ ददथ । (हि) यस्माद् ये किङ्कराः भृत्यास्ते प्रभविष्णुषु विनियोगप्रसादाः स्वाम्याज्ञैव तेषामनुग्रहः। प्रभविष्णुषु स्थितो यो विनियोग इति सप्तम्यत्र वाचकीया ॥ ६२ ॥

108

६३. एते वयमित्यादि ॥ किं बहुना रटितेन । इमे वयं दाराः अपि एते (कुलजीवितं) कुलजीवितनिभाम् इयम् अपि कन्या । (ब्रूत) कथयत एतेषां मध्याद् भवतां येन (कार्यं) प्रयोजनम् । भूहिरण्यादिकं किमिति अपहनुतम्, वराकमित्याह। यस्मात् (बाह्यवस्तुषु) बहिरङ्गेषु भूहिरण्यादिषु वस्तुषु अनास्था अनादरः। आत्मपुत्रकलत्रमपि यो ददाति तस्य धनेऽपि क इव बहुमानः ॥६३॥

६४. इत्यूचिवांस्तमित्यादि॥ (इति) इत्थम् (ऊचिवान्) उच्चमुक्तवान् (हिमालयः) नगनाथः (दरीमुखविसर्पिणा) कन्दराविवरप्रसर्पिणा (प्रतिशब्देन) प्रतिध्वनिना तम् एव अर्थं (द्विः) पुनर्निश्चयार्थं (व्याजहार) अभाषत इव । अन्योऽपि यः किल निश्चयपूर्वकं ददाति स आदरेण वारंवारं निवेदयतीति ॥ ६४ ॥

६५. अथाङ्गिरसमित्यादि ॥ (अथ) ततः (ऋषयः) मुनयः अंगिरसम् ऋषिं (चोदयामासुः) अचूचुदन् । यतः उदाहरणवस्तुषु कथनीयप्रकारेषु अग्रण्यं

प्रवीणम् । स अङ्गिरा (भूधरं) नगाधिपं (प्रत्युवाच) प्रतीपमलपत् । उदाह्रियते कथ्यते इत्युदाहरणं तच्च तद्वस्तूदाहरणवस्तु ॥ ६५ ॥

६६. उमपन्नमित्यादि ॥ 'एते वयं' (कुमार.६-६३) इत्यादिकं' यत् त्वयोक्तमेत दखिलं अतः वा परम् अपरम् अपि अधिकमपि त्वयि उपपन्नं सुघटम् । यतः (शिखराणां) शिखराणि (सदृशी) इव (ते) तव (मनसः) मनः अपि (समुन्नतिः) उन्नतम् उदारम् । महाशयानां किमिव दुष्करम् ॥ ६६ ॥

६७. स्थानेत्वामित्यादि ॥ व्यासादयो (त्वां) भवन्तं स्थावरात्मानं विष्णुं वा यद् आहुः । 'स्थावराणां हिमालयः' (भ.गी.१०-२) इति । यतस्तव कुक्षिः उदरं चराचराणां भूतानाम् (आधारताम्) आधारत्वं गतः। सर्वे हि सत्त्वाः स्थावरजङ्गमाश्च त्वन्मध्ये निवसन्ति। विष्णुरिव जगन्निवास इति सुप्रतीतम् ॥६७॥

६८. गामधास्यदित्यादि ॥ नागः शेषाहिः (मृणालमृदुभिः) बिससुकुमारैः (फणैः) शिरोभिः गां भुवं कथम् अधास्यत् बिभृयात्, यदि आ रसातलमूलात् पातालपर्यन्तं त्वम् एनां न अवालम्बिष्यथाः नाग्रहीष्यथाः। भवत्सहायकेन हि नागराजो मही मुद्वोढुं शक्नोतीत्यर्थः। **'अधास्यत्' इति क्रियातिपत्त्यभावाल्लृङ्यो--गश्चिन्त्यः**॥६८॥

६९. अच्छिन्नामलेत्यादि ॥ (ते) त्वदीयाः कीर्तयः सरितः च पुण्यत्वात् लोकं पुनन्ति । कीदृश्यः (अच्छिन्नामलसंतानाः) अच्छिन्नोऽत्रुटितोऽमलः शुभ्रः सन्तानः प्रबन्धः प्रवाहश्च यासाम् । (समुद्रोर्म्यनिवारिताः) अब्धिकल्लोलैरप्यनिषिद्धप्रसराः उभयोऽपि ॥ ६९ ॥

७०. यथैवेत्यादि ॥ परमेष्ठिनो विष्णोः पादेन प्रभवेण जनकेन सुरसरित् यथैव श्लाघ्यते तथैवोन्नतकंधरेण भवतापि । हिमवतो विष्णुपदी प्रभवति । हरिचरणाच्च भुवनत्रयाक्रमणकाले निर्यातेत्यागमः॥ ७० ॥





७१. तिर्यगूर्ध्वमित्यादि ॥ हरेः विष्णोः (व्यापकः) सर्वव्यापी यो महिमा अभूत् स त्रिविक्रमोद्यतस्य भुवनत्रयाक्रमणस्य सतानं तु नित्यम् । तव तु असौ व्यापी स्वाभाविकः सहज इति विशेषकथनम् । त्रयो विक्रमाः पादन्यासाः समाहृतास्त्रिविक्रमम् ॥ ७१ ॥

७२. यज्ञभागभुजामित्यादि ॥ (यज्ञभागभुजां) देवानां मध्ये यज्ञांशभोजित्वेन त्वया पदम् अवस्थानम् आतस्थुषा कृतवता (सुमेरोः) सुरशिखरिणः (हिरण्मयं) सौवर्ण्यमपि (उच्चैः) उच्चमपि च (शृङ्गं) शिखरं वितथीकृतं निष्फलं विहितम्, असत्यं सम्पादितम् । न ह्यसौ यज्ञांशभुक् । अतश्च सौवर्णेनापि किं तेन क्रियते ॥४२॥

७३. काठिन्यमित्यादि ॥ मृदुकर्कशभेदेन तव द्विरूपम् । तत्र स्थावरे (काये) देहे शिलामये (भवता) त्वया काठिन्यम् (अर्पितं) निहितम् । इदं तु जङ्गं रूपं तव मृदुत्वात् (भक्तिनम्रं) भक्त्या नम्रं पेशलम् । अत एव (अर्हदाराधनम्) अर्हतां पूज्यानामाराधनं सेवनम् । नत्वत्र स्तब्धता ॥७३॥

७४. तदागमनेत्यादि ॥ तद् इत्युपसंहारे । अलं ते महिमसंकीर्तनेन । (नः) अस्माकं तावद् (आगमनकार्यम्) आगमनकृत्यं (शृणु) आकर्णय । कार्यं तु तव एव । न तु नः । किन्तु (श्रेयसाम् उदेशात्) श्रेयोमार्गनिरूपणात् वयम् अपि अंशभागिनः शुभफलासादिनः । तेनास्माकमपि तत्कार्यमेवेति भावः॥ ७४ ॥

७५/७६/७७/७८. अणिमादीत्यादि ॥ (७५) स (ते) तव वरदः शम्भुः (अस्मत् संक्रामितैः) अस्मासु निहितैः पदैः वचोभिः साक्षात् (दुहितरं) सुतां वृणुते अर्थयते । कोऽसावित्याह । यः एवंविधः ईश्वरः इति शब्दम् उच्चैः व्यापकं सार्धचन्द्रं बिभर्ति । शशिखण्डमपि वहतीत्यर्थः। कीदृशं शब्दम् । (अणिमादि गुणोत्थानं) अणिमादीनाम् अणिमा-महिमा-लघिमा-गरिमा-ईशित्व-वशित्व-प्राकाम्य -यथाकामावसायितानां गुणानामुत्थानं प्रभवम् । अणिमादिगुणयुक्तो हीश्वर उच्यते। उत्तिष्ठन्त्यस्मादित्युत्थानम् । (अस्पृष्टपुरुषान्तरम्) अस्पृष्टमगतं

पुरुषान्तरमन्यः पुरुषः आत्मा येन । 'पुरुषविशेषो हीश्वरः'। उच्चैः उन्नतं महाप्रभावं वा । कल्पितान्योन्येत्यादि ॥ (७६) यस्य सम्बन्धिभिः (पृथिव्यादिभिरात्मभिः) पृथ्वप्तेजोवाय्वाकाशैरात्ममूर्तिभिः इदं (विश्वं) व्यक्तं ब्रह्माण्डं तन्यते प्रसार्यते सम्पाद्यते । धुर्यैः अश्वैः (अध्वनि) मार्गे यानः इव रथ इव । कीदृशैस्तैः । (कल्पि-तान्योन्यसामर्थ्यैः) कल्पितं समर्थितमन्योन्यं सामर्थ्यं शक्त्याधानं यैः धृतिसंग्रह-पङ्क्तिव्यूहावकाशवृत्तिभिः परस्पराहितशक्तिभिः किल ते भुवनानि निर्मातुं प्रभवन्ति। धुर्या अप्यन्योन्यं शक्तिमुपजीवन्तो यानं तन्त्रयन्ति । योगिनः इत्यादि (७७) यं देवं (योगिनः) अध्यात्मविदः (क्षेत्राभ्यन्तरवर्तिनं) शरीरान्तस्थं परमात्माख्यं विचिन्वन्ति गवेष्यन्ति । (यस्य) यदीयं पदमनावृत्तिभयमाहुः । अविद्यमानमावृत्ति भयं संसरणत्रासा यस्य । न हि तत्स्थानमासाय पुनर्जायते । स त इत्यादि (७८) तथा विश्वस्य जगतः कर्मणां शुभाशुभानां साक्षी द्रष्टा हृत्स्थितित्वात्। वरदः अभीष्टार्थदाता । स एवंविधः (शंभुः) महेश्वरः साक्षात् आत्मार्थं (ते) तव दुहितरम् उमां (वृणुते) अर्थयते ॥७८॥ चतुर्भिः कुलकम् ।

७९. तमर्थमित्यादि ॥ अतश्च तं शंम्भुं त्वं (सुतया) दुहित्रा योक्तुं घटयितुम् अर्हसि । अर्थम् इव भारत्या । वागर्थौ हि नित्यसम्बद्धावन्योन्यमव्यभिचारात् । तद्दाने च तवैव गुणः यस्मात् सद्भर्त्रे साधवे पत्ये (प्रतिपादिता) निसृष्टा (कन्या) कुमारी (पितुः) पित्रोः अशोच्या भवति ॥७९॥

८०. यावन्तीत्यादि ॥ त्वमस्मै दुहितरं देहि यावत् एनां गौरीं यानि भूतानि (स्थवराणि च) चराणि च मातरं कल्पयन्तु । तद्दानेन कथमसौ जनित्री सम्पद्यते इत्याह । (हि) यस्मात् ईशः महादेवः (जगतः) जगतां पिता सृष्टिकर्तृत्वात् योगक्षेमवहनाच्च । पितुर्या भार्या सा मातेत्युच्यते ॥ ८० ॥

८१. प्रणम्य सितीत्यादि ॥ अपि च विबुधाः देवाः आह्निकप्रक्रियायां (सितिकण्ठाय) नीलगलं प्रणम्य अस्याः अपि गौर्याः (चूडामणिमरीचिभिः) शिरोरत्नरश्मिभिः (चरणौ) पादौ रञ्जयन्तु चित्रयन्तु । प्रणम्य सितिकण्ठाय





'इत्युपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति द्वितीयाया न्याय्यत्वात् । '**स्वयम्भुवे नमस्कृत्य' इत्यादिप्रयोगदर्शनाच्चतुर्थीप्रयोगः**। ॥ ८१ ॥

८२. उमा वधूरित्यादि ॥ (त्वत्कुलोद्भूतये) तव वंशस्योद्भूतयेऽभ्युदयाय विधिः अयम् अलं पर्याप्तः । कोऽसावित्याह । उमा वधूः गौरी दीयते त्वं च दाता वरः (शम्भुः) महेश्वरो वयं च याचितार इति । अनुद्योतिता अपि गुणाः ध्वनितपदत्वात्प्रतीयन्ते । (यथा) '**रामोऽस्मि सर्वं सहे' (हनुमन्नाटकम् ५-७)** इति ॥ ८२ ॥

८३. अस्तोतुरित्यादि ॥ सुतासम्बन्धविधिना गौरीं दत्त्वा (विश्वगुरोः) शम्भोरपि गुरुः भव अतिपूज्यः सम्पद्यस्व । श्वशुरो हि पितृनिभः। कीदृशस्य । सर्वोत्कृष्टत्वात् स्तूयमानस्य वन्द्यस्य च । कदाचित्सोऽप्यन्यान् स्तूयात् प्रणमेच्चेदित्याह । अस्तोतुः (अनन्यवन्दिनः) अन्यांश्चावन्दितुः॥ ८३ ॥

८४. एवं वादिनीत्यादि ॥ पार्वती (एवम्) इत्थं (वादिनि) ब्रुवाणे (देवर्षौ) अङ्गिरसि (पितुः) हिमवतः (पार्श्वे) निकटे त्रपया (अधोमुखी) अवनता सती (लीलाकमलपत्राणि) विलासनलिनपलाशानि (गणयामास) अजीगणदिति लज्जाविर्भावेनाभिलाषातिशयसूचनम् ॥ ८४ ॥

८५. शैल इत्यादि ॥ (शैलः) हिमवान् अपि (संपूर्णकामः) संपन्नमनोरथ अपि किमत्र वक्तव्यमिति (मेनामुखं) पत्नीवक्त्रम् (अवैक्षत) आलुलोके । (हि) यस्मात् ये कुटुम्बिनः गृहस्थास्ते (कन्यार्थे) कन्याप्रयोजने प्रायेण (गृहिणीनेत्राः) भार्याचक्षुषः। तस्मै यद्रोचते तत्कुर्वन्तीत्यर्थः॥ ८५ ॥

८६/८७. मेने मेनापीत्यादि ॥ (८६) इदमत्रेत्यादि ॥ (८७) (मेना अपि) मेने अङ्गीकार । (पतिव्रताः) (अव्यभिचारिण्यः) च अनिषेधिका भवन्ति । पत्युः (समीप्सितं) वाञ्छितं (कार्यं) न निषेधयन्ति, यदेव रोचते भर्तुस्तत्कुर्वन्तीत्यर्थः। ततः (इदं) **कन्यादानमेव** उत्तरं न्याय्यं न त्वन्यदित्यसौ (बुद्ध्या) धिया (विमृश्य निश्चित्य प्रकृतार्थोपयोगि किञ्चिदुक्त्वा (वचसाम् अन्ते) वचनान्ते (मङ्गलालङ्कृतां)

मङ्गलाभरणभूषितां तां (सुतां) तनयाम् (आददे) अग्रहीत् ॥८६॥८७॥ युग्मम्।

८८/८९. एहि शर्वेत्यादि ॥ (८८) एतावदुक्त्वा तनयामित्यादि ॥ (८९) हे (शर्वापर्णे (वत्से) पुत्रि (एहि) आगच्छ हरार्थं त्वं भिक्षा मया परिकल्पिता । (अर्थिनः) मार्गकाश्च (मुनयः) सप्तर्षयोऽतश्च (गृहमेधिफलं) गृहस्थफलं मया अद्य प्राप्तम् । गृहमेधिना हि प्राप्तातिथये भिक्षा देया । (एतावत्) इत्थं तां (तनयां) पुत्रीम् (उक्त्वा) अभिधाय मुनीन् (आह) अवादीत् । इयं (त्रिलोचनवधूः) शर्वपत्नी (वः) युष्मान् (सर्वान्) अखिलान् (नमति) प्रणमतीति **दानं ध्वनितम्।** अर्प्यतेऽस्मै इत्यर्पणम् । 'कृत्यल्युटो बहुलम्' (पा.सू.३-३-११३) शर्वोऽर्पणो यस्याः सा शर्वार्पणा तस्याः संबोधनं क्रियते । अथ ईश्वरार्थं निमित्ते गृहं वेश्म दाराश्च दारैर्मेधन्ते इति गृहमेधिनो गृहस्थाः। अर्थयन्ते (इति) अर्थिनः॥ ८८ ॥ ८९ ॥ युग्मम् ।

९०. ईप्सितार्थेत्यादि ॥ ततः (ते) मुनयः (ईप्सितार्थक्रियोदारम्) अभिलषित वस्तुसम्पत्तिमहार्थं (गिरेः वचः) हिमवद्वचनम् अभिनन्द्य अनुमोद्य प्रणमन्तीम् अम्बिकां गौरीम् आशीर्भिः एधयामासुः अवीवृधन् । कीदृशीभिः । (पुरःपाकाभिः) पुरोऽग्रे पाकः फलं भर्तृवाल्लभ्यलक्षणं यासां ताभिः, पुरः पाकाभिर्निकटा-भ्युदयाभिः॥९०॥

९१. तां प्रणामेत्यादि ॥ भर्तृवार्तया (लज्जमानां) त्रपमाणां (ताम्) अम्बिकाम् (अरुन्धती) वसिष्ठपत्नी (अङ्कम्) आरोपयामास उत्सङ्गे जग्राह । (प्रणामादरस्रस्तजाम्बूनदवसंकाम्) प्रणामादरेण पादवन्दनव्यग्रयत्वेन स्रस्तः पतितो हेमकर्णपूरो यस्यास्ताम् ॥ ९१ ॥

९२. तन्मातरमित्त्यादि । तथा (दुहितृस्नेहविक्लवां) सुतास्नेहकातरत्वात् (अश्रुमुखीं) रुदन्तीं (तन्मातरं) मेनामसौ अनन्यपूर्वस्य अकृतदारान्तरस्य (वरस्य) जामातुः गुणैः (विशोकां) विगतदुःखाम् अकरोत् । 'सर्वेश्वरः सर्वशक्तिर्वत्सल'स्ते जामाता सम्पन्नः । तत्र प्रहर्षस्थाने कः शोकावसरः' इति । अविद्यमाना अन्या पूर्वं यस्य स अनन्यपूर्वम् इति सपत्नीशङ्कापनोदः परं वचनमकृतदारान्तर-स्येत्यर्थः॥ ९२ ॥





९३. वैवाहिकीमित्यादि ॥ ततः ते मुनयः गमनायोत्तस्थुः। तत्क्षणं हरबन्धुना हिमाचलेन हरसुरेण वैवाहिकीं तिथिं पृष्टाः कदा विवाहोऽस्त्विति तेऽपि त्र्यहदूर्ध्वं परं चतुर्थेऽहनीति (आख्याय) उक्त्वा चेरुः। (चीरपरिग्रहाः) चीरं वल्कलमेव परिग्रहो धनं येषामिति निःस्पृहत्वकथनम् । प्रायेण हि कन्याविवाहमेलकाः सस्पृहा भवन्ति । विवाहः प्रयोजनं यस्यां सा ताम् वैवाहिकीम् ॥ ९३ ॥

९४. ते हिमालयमित्यादि ॥ ततः ते मुनयः (हिमालयम्) आद्रिनाथम् आमन्त्र्य आपृच्छय (पुनः) भूयः (शूलिनं) भवं (प्रेक्ष्य) ददृशिरे । गौरीलाभस्वरूरपम् अर्थं सिद्धम् (अस्मै) कथयित्वा (तद्विसृष्टाः) तेनेश्वरेण विसर्जिताः खम् उद्ययुः। दिवमगमन्निति लाघवेन कथोपसंहारः॥ ९४ ॥

९५. पशुपतिरित्यादि ॥ मुनुयः स्वस्थानं गताः। (पशुपतिः अपि) भगवानपि (अद्रितनयासमागमोत्कः) पार्वतीसङ्गमोत्कण्ठितः तानि त्रीणि अहानि दिनानि कृच्छ्रात् क्लेशेन अगमयत् । तेषां पतिरिति यद्येवं कथमसौ रागीत्याह । कम् अपरम् अवशम् अजितेन्द्रियम् (अमी) एते भावाः पदार्था न (विप्रकुर्युः) विकारिणं कुर्युरपि तु सर्वमपि । यस्मात् विभुम् अपि वशिनमपि स्पृशन्ति **नाप्यस्मदादीनां किमप्युपालम्भस्थानमिति कवेः कालिदासस्य स्वाभिप्रायोक्ति, विलासित्वात् ।** पुष्पिताग्रावृत्तमिति भद्रम् ॥ ९५ ॥

**इत्यानन्ददेवायनिवल्लभदेवविरचितायां**
**कुमारसंभवपञ्जिकायामुमाप्रदानो नाम षष्ठः सर्गः समाप्तः॥**

# श्रीः

## అనుబంధము-6

## ఉపయుక్తగ్రన్థసూచీ


1) మేఘదూతమ్ - మృణాళినీ వ్యాఖ్య
2) కుమారసమ్భవమ్ - పుంసవనీ వ్యాఖ్య
3) కుమారసమ్భవమ్ - ప్రకాశికా మరియు వివరణం వ్యాఖ్య
4) అష్టాధ్యాయీ సూత్రపాఠః - ప్రహ్లాద టిప్పణి - కృష్ణదాస్ అకాడమి - 2001.
5) [illegible] [illegible] - [illegible] [illegible] – 3 [illegible] – [illegible].
6) హలాయుధకోశః - ఉత్తరప్రదేశ్ హిందీసంస్థాన్ - 1993.
7) ఉణాదికోశః - యుధిష్ఠరమీమాంసకః - 2000
8) సంస్కృతధాతుసాగరతరణిః - మద్రాస్ పబ్లికేషన్.
9) అభిధానచిన్తామణిః - చౌఖాంబా - 1996
10) అమరకోశః - గురుబాలప్రబోధికా - వావిళ్ల ప్రచురణ.
11) అవ్యయకోశః – [illegible] [illegible] [illegible] [illegible], [illegible] - 1971
12) సంకేతపదకోశము - డా॥ రవ్వా శ్రీహరి - పతంజలి పబ్లికేషన్స్ - 2002.
13) బృహద్ధాతుకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
14) బృహచ్ఛబ్దకుసుమాకరః - హరేకాన్తమిశ్రా - చౌఖాంబా - 2003.
15) సంస్కృతవ్యాకరణమ్ - శ్రీ ఆర్.వి.ఆర్.కె. శాస్త్రి - కృష్ణానందమఠం - 1997
16) పుష్పబాణవిలాసః - వేదం వారి ప్రచురణ - 1931
17) అమరుకావ్యమ్ - వేదం వారి ప్రచురణ - 1931
18) మనుస్మృతి - గాయత్రీ ప్రచురణ - 2003
19) తర్కశాస్త్రం - వ్యాఖ్యాత - డా॥ రామానుజాచార్య - 1991
20) భర్తృహరిసుభాషితములు - వావిళ్ల ప్రచురణ.
21) యోగదర్శనమ్ - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
22) శ్రీమద్రామాయణమ్ - బాలానందినీ వ్యాఖ్య - ఆర్షవిజ్ఞాన ట్రస్ట్.
23) ఋతుసంహారః - మృణాళినీ వ్యాఖ్య - రామోరా - 2004
24) రఘువంశమ్ - వావిళ్ల ప్రచురణ - 1926.
25) రఘువంశమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2004.
26) కుమారసంభవమ్ - వేదం వారి ప్రచురణ - 1943
27) కుమారసంభవమ్ - పబ్లిషర్ ఆర్.సి. శాస్త్రి - 2003.
28) ఘటకర్పరకావ్యమ్ - మఞ్జరీ వ్యాఖ్య - రామోరా, దుర్గానంద - 2003.
29) శిశుపాలవధమ్ - కృష్ణదాస్ అకాడమి - 1998
30) మాఘకావ్యమ్ - వావిళ్ల ప్రచురణ - 1967
31) కావ్యాదర్శః - బాలానందినీవ్యాఖ్యాసహితః







32) కావ్యాదర్శః - చౌఖాంబా - 2001
33) ఏకావళి - మాధవీయ వివృతి - అభినవభారతి ప్రచురణ - గుంటూరు.
34) కావ్యప్రకాశము - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
35) ప్రతారుద్రీయయశోభూషణమ్ - వావిళ్ల ప్రచురణ - 1965
36) సాహిత్యదర్పణమ్ - కృష్ణదాస్ అకాడమి - 2005
37) దశరూపకమ్ - చౌఖాంబా - 1987
38) ధ్వన్యాలోకమ్ - బాలానందినీవ్యాఖ్యా - శ్రీజయలక్ష్మీ పబ్లికేషన్స్ - 1998
39) శబ్దమంజరీ - శ్రీ జయలక్ష్మీ పబ్లికేషన్స్ - 2001
40) భగవద్గీత - గీతాప్రెస్.
41) శ్రీమద్భాగవతమహాపురాణమ్ - గీతాప్రెస్.
42) నైషధీయచరితమ్ - నారాయణీయవ్యాఖ్యాసహితమ్.
43) నైషధీయచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి ప్రచురణ.
44) [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] - [illegible]. [illegible].
45) [illegible] [illegible] [illegible] [illegible] - [illegible].[illegible]. [illegible]. - [illegible] [illegible].
46) దశకుమారచరితమ్-1 - వేదంవారి ప్రచురణ - 1994
47) సూర్యశతకము - బాలప్రభ - డా॥ తాళ్లూరి - 1990
48) ప్రసన్నరాఘవమ్ - చౌఖాంబా - 1972
49) సిద్ధాంతకౌముదీ - నిర్ణయ్‌సాగర్ ప్రెస్ - 1929.
50) అష్టాధ్యాయీ పదానుక్రమకోశః - పరిమళ పబ్లికేషన్స్ - 1996.
51) గీతగోవిందకావ్యము - వావిళ్ల ప్రచురణ - 1993
52) కిరాతార్జునీయమ్-1 - శ్రీ పరమేశ్వర పబ్లికేషన్స్.
53) కిరాతార్జునీయమ్-3 - సంస్కృతభాషా ప్రచార సమితి.
54) భామినీవిలాసః - సురభారతీ ప్రకాశమ్ - 2000
55) విక్రమోర్వశీయమ్ - సంస్కృత అకాడమి - ఓ.యు., హైదరాబాద్.
56) విక్రమోర్వశీయమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
57) మాళవికాగ్నిమిత్రమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
58) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ ఆర్.సి.శాస్త్రి - 2002
59) అభిజ్ఞానశాకున్తలమ్ - పబ్లిషర్ నోరి భోగీశ్వరశర్మ - 2002
60) నాగానందమ్ - శిరోమణివ్యాఖ్య - తెలుగు విశ్వవిద్యాలయం - 2001.
61) ఉత్తరరామచరితమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1965
62) ఉత్తరరామచరితమ్ - చౌఖాంబా - 2003
63) మాలతీమాధవమ్ - యం.ఆర్. కాలే - బనారసీదాస్ - 1997.

64) మృచ్ఛకటికమ్ - డా॥ బేతవోలు రామబ్రహ్మం - 2005.
65) ముద్రారాక్షసమ్ - ఆర్.డి. కర్మార్కర్ - చౌఖాంబా.
66) ముద్రారాక్షసమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి,
67) వేణీసంహారమ్ - డా॥ బేతవోలు రామబ్రహ్మం-తెలుగు విశ్వవిద్యాలయం - 1988
68) కావ్యాలంకారః - భామహవిరచితః - బా.వ్యా.-సంస్కృతభాషాప్రచారసమితి- 2004
69) సరస్వతీకంఠాభరణమ్ - ఆంధ్రప్రదేశ్ సాహిత్య అకాడమి - 1984
70) వక్రోక్తిజీవితమ్ - బాలానందినీవ్యాఖ్యా
71) పాణినివిరచితాఅష్టాధ్యాయీ - 2 భాగములు - చౌఖాంబా - 2004.
72) పంచతంత్రం-1 & 2 - సంస్కృతభాషాప్రచారసమితి - 1988.
73) హితోపదేశః - సంస్కృతభాషాప్రచారసమితి
74) శ్రీ విష్ణుసహస్రనామస్తోత్రమ్ - ఆంధ్రానువాదము - శ్రీ న.చ.రఘునాథాచార్యులు.
75) బృహత్స్తోత్రరత్నాకరః - వావిళ్ల ప్రచురణ.
76) సర్వశబ్దః - ఏ.యి.యస్. పబ్లికేషన్ - 2004
77) శబ్దసాగర్ - చౌఖాంబా - 2004
78) రసగంగాధరము - (అనువాదము) ధరణికోట వెంకటసుబ్బయ్య.
79) లఘుసిద్ధాంతకౌముదీ - బాలానందినీవ్యాఖ్య - సంస్కృతభాషాప్రచారసమితి.
80) అమరుకకావ్యమ్ - మనసిజవ్యాఖ్య - సాధన గ్రంథ మండలి, తెనాలి.
81) కిరాతార్జునీయమ్ - వావిళ్ల ప్రచురణ.
82) రత్నావళి - చౌఖాంబా ప్రచురణ.
83) చమత్కారచంద్రిక - ఆంధ్రవిశ్వవిద్యాలయ ప్రచురణ, వాల్టేర్ - 1969
84) శ్రీమహాభారతమ్ - వావిళ్ల ప్రతి - 1931

- - -







**ధన్యవాదములతో...**
**మీ ... రా మో రా**